लव । [ स्वगतं । ] एत्थ दाणिं को उवाओ ?

[ अथ नेपथ्याद्प्रविष्टा प्रतीहारी । ]

एसा भअवदी कामन्दई ।

उभे । किं भअवदी ?

प्रती । अहिदारिअं दट्ठुकामा आअदा ।

उभे । तदो किं विलम्बीअदि ?

प्रतीहारी निष्क्रान्ता । ]

[ मालती चित्रफलकं आच्छादयति । ]

लव । [ स्वगतं । ] सुसमोहिदं क्खु आदम् ।

[ ततः प्रविशति, कामन्दकी अवलोकिता च । ]

काम । साधु सखे ! भूरिवसो ! साधु, प्रभवति निजस्य कन्यकाजनस्य महाराज इत्युभयलोकाविरुद्धं वचनमुपन्यस्तम् । अपि च । अद्य मन्मथोद्यानदृष्टान्तेन भगवतो विधेः अनुकूलतामवगच्छामि । बकुलावलीचित्रफलकव्यतिकरमर्मविधानकौतुकम् अद्भुतं प्रमोदमुल्लासयति । इतरेतरानुरागो हि दारकर्मणि परार्ध्यं मङ्गलं, गीतश्चायमर्थोऽङ्गिरसा, यस्यां मनश्चक्षुषोरनुबन्धः तस्यामृद्धिरिति ।

अव । एसा मालदी ।

काम । [ निर्वर्ण्य । ]

---

अत्र परिवेति किं बीवे श्लोका । तु किन्तु मम तात: पिता दयित: प्रिय: प्राण्य: अनवाप्यता जननी प्राणैरवं:, अर्थाक्षिनं निर्वर्ण्य कुशल प्राप्यं न तु अर्थ इविष्य: माधववां जन: नैव प्राण्य: न च दृष्ट: जीवितं जीवनं असैव: न च प्राप्यं अजीवनपरित्यागाविवाषान् चप्राप्यतं अजीवनमिति भाव: ।

[उभे उत्तिष्ठतः।]

लव। [मालतीं चालयित्वा।] मालदि! इदो।

[उभे उपविशतः।]

माल। भअवदि! वन्दामि।

काम। महाभागे! अभिमतफलभाजनं भूयाः।

लव। एदं आसणं, एत्थ उवविसदु भअवदी।

[सर्वा उपविशन्ति।]

माल। कुसलं भअवदीए?

काम। [निःश्वस्य।] कुशलमिव।

लव। [स्वगतं।] पत्थावणा क्खु एसा कवडणाडअस्स। [प्रकाशम्] गुरुअ-बाह-त्थम्भ-मन्थरिद-कण्ठ-पडिखलन्त-णी-सासं, अण्णारिसं जेव्व भअवदीए वअणं, ता किं दाणिं उव्वेअकारणं हुविस्सदि (घ)

काम। ननु अयमेव चीरचीवरविरुद्धः परिचयः।

लव। कधं विअ?

---

(घ) प्रस्तावना खलु एषा कपटनाटकस्य। गुरुबाष्पस्तम्भमन्थरितकण्ठ-प्रतिस्खलन्निःश्वासमन्यादृशमेव भगवत्या वचनम्। तत् किमिदानीमुद्वेगकारणं भविष्यति। मन्थरितः मन्दीकृतः।

---

घाट: कम्पादि: स्वेद:, नयने चिबुके मधुरे सुन्दरे चाकेकरे चाकुञ्चिते त्रिके सरले तारे बत तत् पद, मानसान्त: ईर्षाचलनं, वनमुकुलयो: मुकुलाकारयो: स्तनयो: उन्नमन्ती विच्छेदशून्य: निरन्तरनिबन्ध: प्रबन्ध:, गण्डाभोगे कपोलमण्डले पुलकपटलं पुलकितत्वं, मूर्च्छा, मोह:, चेतना च। अन्या: मालत्या माधवविरहे एते अरक्तात्व्यापारविशेषा जायन्ते। विरहविधुरा इत्यभिप्राय:।

काम। अयि! त्वमपि न वेत्सि?

इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रयोगशोच्यं, विफलगुणातिशयं भविष्यतीति ॥(६)

[ मालती वैलक्ष्यं नाटयति। ]

लव। अयि एदं, णरेन्दवअणाणुरोधिणा अमच्चेण णन्दणस्स पडिवण्णा मालदी त्ति सअलो जणो अमच्चं जुगुच्छेदि (क)।

माल। [ स्वगतं। ] कधं उवहारीकिदह्मि तादेण राइणो? (ख)।

काम। आश्चर्यं।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा,
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्?।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः,
सुतादानान्मित्रं भवतु, स हि मे नन्दन इति ॥ (७)

---

(क) अयि! नरेन्द्रवचनानुरोधिना अमात्येन नन्दनस्य प्रतिपन्ना मालतीति, सकलो जनोऽमात्यं जुगुप्सते।

(ख) कथमुपहारीकृतास्मि तातेन राज्ञः?

---

(६) इदमिति। इह अत्र इदं मदनस्य जैत्रमस्त्रं जयशीलमायुधस्वरूपं सहजविलासनिबन्धनं नैसर्गिकभावमूलकं शरीरं अनुचितवरस्य संयोगेन शोच्यं शोचनीयं सत् विफलगुणातिशयं विफलं गुणातिशयं यस्य तत् भावप्रधाननिर्देशः भविष्यति ॥

(७) गुणेति। गुणापेक्षाशून्यं यथायथा गुणमनपेक्ष्य वैवाह्यः। कथमिदमुपक्रान्तं आरब्धं एतदनुचितमित्यर्थः। अथवा कुटिलनयनिष्णातमनसां

मात्मानमुदयनाय प्रायच्छत् इत्यादि, तदपि साहसिकमित्य-नुपदेष्टव्यकल्पं, सर्वथा,

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्यात्
दत्त्वात्मजां भवतु निर्वृतिमान् अमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन,
धूमग्रहेण शशिनो विमला कलेव॥ (८)

माल। [आत्मं स्वगतं।] हा ताद! तुमम्पि मम णाम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए (क)।

अव। चिराइदं भअवदीए, णं भणामि, अणुत्तसरीरो महाभाओ माहवोत्ति (ख)।

काम। गम्यते, वत्से! अनुजानीहि माम्।

लव। [जनान्तिकं।] सहि! मालदि! सम्पदं भअवदीए सआसादो, तस्स महाणुभावस्स उग्गमं जाणीमो (ग)।

---

(क) हा तात! त्वमपि मम नाम एवमिति सर्वथा जितं भोगतृष्णया।

(ख) चिरायितं भगवत्या, ननु भणामि अनुत्तशरीरः खलु महाभागो माधव इति।

(ग) सखि! मालति! साम्प्रतं भगवत्याः सकाशात्, तस्य महानुभावस्य उद्गमं जानीमः। उद्गमम् उत्पत्तिम्।

---

(८) राज्ञ इति। अमात्यः सचिवः कार्य्यात् कार्य्यवशात् राज्ञो नृपस्य प्रियाय सुहृदे सचिवाय अमात्याय आत्मजां मालतीं दत्त्वा निर्वृतिमान् सुखी भवतु। धूमग्रहेण धूमाकारराहुग्रहेण दर्शनमुग्धेनेत्यर्थः। शशिनः चन्द्रस्य विमला मनोहरा कलेवेति निदर्शना। वार्द्धक्यात् कौरूप्याच्च दुर्दर्शनेन अनेनापि इयं मालती घटतां वर्त्तताम् इयमस्य सहचारिणी भवतु इत्यर्थः। अत्र सम्भावनार्थत्वात् सम्भावयोगेऽपि प्रतीया।

माल। [अपवार्य्य] सहि ! अत्थि मे कोदूहलं।

लव। [प्रकाशं।] भअवदि ! को एसो माहवो णाम, जस्स भअवदी सिणेहगुरुअं अत्ताणं धारेदि ? (ञ)।

काम। अप्रस्ताविकी महती एषा कथा।

लव। तधावि आचक्खदु, मे भअवदी। पसादं करेदु (झ)

काम। श्रूयतां, अस्ति विदर्भाधिपतेरमात्यः, समस्तधुर्य्यप्रकाण्डचक्रचूडामणिर्देवरातो नाम, यम् अशेषभुवनमहनीयपुण्यमहिमानम् आत्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृशश्चेति। अपि च।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः,
सुकृतविलसितानां स्थानमूर्ज्जस्वलानाम्।
अकलितमहिमानः केतनं मङ्गलानाम्,
कथमपि भुवनेऽस्मिन् तादृशाः सम्भवन्ति॥ (८)

माल। सहि ! तं क्खु भअवदीगहिदणामधेअं सव्वदा तादो सुमरेदि (ञ)।

---

(ञ) भगवति। क एष माधवो नाम, यस्य भगवती स्नेहगुरुकमात्मानं धारयति ? अस्य कर्म इत्यर्थः।

(झ) तथाप्याचष्टां मे भगवती प्रसादं करोतु।

(ञ) सखि ! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति।

---

(८) व्यतिकरितेति। श्वेतमानैः शुभ्रैर्यशोभिर्व्यतिकरितदिगन्ता व्याप्तदिग्विभागाः ऊर्जस्वलानां बलवतां सुकृतविलसितानां पुण्यपरिणामानां स्थानम् अकलितमहिमानः अविदितमाहात्म्याः मङ्गलानां केतनं निवासः बहुविध विधेयताभ्यासात् मनुष्यकल्पम्। तादृशा महान्त इत्यर्थः। अस्मिन् भुवने कथमपि केनचित् भाग्यवशेनैव सम्भवन्ति। आयासं विना एतादृग्महतां कुतः प्रादुर्भाव इति भावः॥

लव। सहि! ममं क्खु विज्जाहिगमो किदोत्ति, तक्कालसंवेदिणो मन्तन्ति (८)।

काम। तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ (१०)

लव। [जनान्तिकं।] सहि! अवि णाम माहवो भवे?

काम। अमी विद्याधारः शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः,
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥ (११)

---

(८) सखि! मम खलु विद्याधिगमः कृत इति तत्कालसंवेदिनो मन्त्रयन्ते।

---

(१०) ततइति। स्फुरितगुणद्युतिः प्रकाशमानगुणोत्कर्षश्चासौ सुन्दरश्च कलावान् चतुःषष्टिकलाकुशलः नयनवतां दृष्टिमतां महोत्सवस्य हेतुः इह जगति ततो देवरातात् उदयगिरेः उदयाचलाद् बालचन्द्र इव उदियाय उत्पन्न इत्युपमा। चन्द्रेऽपि पूर्वोक्तानि विशेषणानि योज्यानि।

(११) अमीति। विद्याधारः विद्यानिधिः शिशुरपि बालोऽसौ माधवः भवनात् गृहात् विनिर्गत्य गृहादिकं त्यक्त्वा विदेशं गतवान्ः। सम्प्रति प्रत्यक्षकाले अविकलशरच्चन्द्रमधुरः सकलशारदशशधरसुन्दर इत्यर्थः। इह अत्र देशे आयातः आगतः। यस्य आलोकस्थाने दर्शनस्थानभागे उन्मादतरलैः उन्मत्ततया चपलैः। माधवदर्शनजन्यमन्मथपीड़ा उन्मादः। नारीणां कटाक्षैः अपाङ्गभागैः कुवलयितानि सञ्जातकुवलयानि तारकादित्वादितच् प्रत्ययः।

तदुत्तिष्ठामः। [इत्युत्तिष्ठति।]

माल। [अपवार्य्य।] कधं उवहारीकिदम्हि राअणो तादेण, राआराहणं क्खु, तादस्स गुरुअं ण उण मालदी। [सास्रं।] हा ताद! तुमम्हि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। [सानन्दं।] कधं महाकुलप्पभवो वि सो महाणुभावो सुभणिदं पियसहीए कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति। अवि णाम तं पुणोवि पेक्खिस्सं (ड)।

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदरम्ह। (ढ)

काम। [अपवार्य्य।] साधु, सम्प्रति मया तटस्थयैव, मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य, लघुकृतो भारः। तथाहि।

वरेऽन्यस्मिन् द्वेषः, पितरि विचिकित्सा च जनिता,
पुराहृत्तोद्गारैरपि च कथिता कार्य्यपदवी।
स्तुतं तन्माहात्म्यं, यदभिजनतो यच्च गुणतः
प्रसङ्गात् वत्सस्येत्यथ विधिविधेयः परिचयः॥ (११)

[इति निष्क्रान्ताः सर्वे।]

इति मालतीमाधवे धवलगृहो नाम द्वितीयोऽङ्कः।

---

(ड) कथमुपहारीकृतास्मि राज्ञस्तातेन, राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती। हा तात! त्वमपि नाम ममैवमिति, सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः सुभणितं प्रियसख्या, कुतो वा महोदधीन्यादि। अपि नाम पुनरपि तं प्रेक्षिष्ये।

(ढ) अवलोकिते! इत इत एतेन सोपानेनावतरावः।

---

(११) वर इति। अन्यस्मिन् वरे पत्यौ नन्दने द्वेषः, पितरि विचिकित्सा निन्दा च जनिता पुरावृत्तोद्गारैः इतिहासकथनैः, शकुन्तलादीनां पितृनिरपेक्षस्वदानकथनैः कार्य्यपदवी कर्त्तव्यः कथिता च वत्सस्य माधवस्य प्रसङ्गात् अभिजनतः

बुद्ध। किंति तहिं माहवो अणुप्पेसिदो ? (क)

अव। अज्ज कसणचउद्दसीत्ति, तत्थ भअवदीए सअं मालदी सङ्करघरं गमिस्सदि, तदो सिव एव्व सोहग्गं वड्ढदित्ति देवदाराहणणिमित्तं सअलकुसुमावचअं उद्दिसिअ, लवङ्गिआदुदीअं मालदीं, भअवदीजेव्व कुसुमाअरुज्जाणं णाअइस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति। तुमं उण कहिं पत्थिदा ? (ख)।

बुद्ध। अहं क्खु सङ्करघरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा, तदो भअवदीए पादवन्दणं कदुअ, तहिं जेव्व गच्छामि (ग)।

अव। तुमं क्खु भअवदीए कस्सिं पओअणे णिउत्ता, तत्थ को वुत्तन्तो ? (घ)।

बुद्ध। मए क्खु भअवदीए समादेसेण, तासु तासु विस्सम्भकहासु, ईरिसो तारिसोत्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए दूरं आरोविदो परोक्खाणुराओ एसो अ से मणोरहो, अवि णाम तं पेक्खामित्ति (ङ)।

---

(क) किमिति तत्र माधवोऽनुप्रेषितः ?।

(ख) अद्य कृष्णचतुर्दशीति, तत्र भगवत्या स्वयं मालती शङ्करगृहं गमिष्यति, ततः शिव एवं सौभाग्यं वर्द्धत इति, देवताराधननिमित्तं सकलकुसुमावचयमुद्दिश्य, लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यतीति, ततोऽन्योन्यदर्शनं भवतु इति। त्वं पुनः क्व प्रस्थिता ?

(ग) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता, ततो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि।

(घ) त्वं खलु भगवत्या कस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ? मकरन्दस्य मदयन्तिकापरिचयेऽपि किं कृतम् इत्यर्थः।

(ङ) मया खलु भगवत्याः समादेशेन तासु तासु विश्वासकथासु, ईदृश-

आकुन्तलादीनितिहाससवादान् प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय, चिन्तास्तिमितत्वमेति ॥
(१)

तदद्य माधवमनन्तरमुपक्रमिष्ये ।
[ नेपथ्याभिमुखम् । ] वत्से ! इत इतः ।

[ ततः प्रविशति मालती लवङ्गिका च । ]

माल । [स्वगतम् । ] कधं उवहारीकिदम्हि । [इत्यादि पूर्वोक्तं पठति । ]

लव । सहि ! एसो क्खु महुर-महु-रसोग्गार-मञ्जरी कवलण-केलि-कल--कोइल--उल--कोलाहलाउलिद--सहआर-सिहरुड्डीण-चडुल चञ्चरीअणिअर-व्वदिकरद्दलिद-दल-कराल-चम्प-वाहिआस-मणोहरो, मराल-मंसल-जहण-परिणाहुव्वह-णमन्थरोरुभर विसंठुल-खलिद-चलण--संचार-मसिण-गमणोव-णीद-सिममीअर-सुहाबिंदुदव्वन्त-सुह--सुह--चन्दणाअमाण-सी-अलप्फरसो, तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो, ता पविसम्ह (ठ) [ इति परिक्रम्य प्रविशतः । ]

---

(ठ) सखि ! एष खलु मधुरमधुरसोद्गारमञ्जरीकवलनकेलिकलकोकिल-कुलकोलाहलाकुलितसहकारशिखरोड्डीन-चटुलचञ्चरीकनिकरव्यतिकरोद्दलितदल-करालचम्पकाधिवासमनोहरो, मरालमांसलजघनपरिणाहोद्वहनमन्थरोरुभर-विसंष्ठुलस्खलितचरणसञ्चारमसृणगमनोपनीतस्वेदशीकरसुधाबिन्दूयमानसुखसुख-चन्द्रचन्दनायमानशीतलस्पर्शः त्वां परिष्वजति कुसुमाकरोद्यानमारुतः तत् प्रवि-शावः । यदैव खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति सम्बन्धः ।

---

(१) अन्यपरैः वचोभिः प्रस्ताविताम् कथाप्रसङ्गेन उत्थापिताम् आकुन्तला-दीन् इतिहासप्रबन्धान् श्रुत्वा मदङ्गनिवेशितशरीरा सती चिरकालं व्याप्य चिन्ता-स्तब्धतामेति ।

काम। [मालतीं परिष्वज्य।] अयि! विरम, निःसहासि जाता। तथापि।

स्खलयति वचनं ते, संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (८)

[मालती लज्जते।]

लव। सोढव्वं भअवदीए आआसम्। (त)

माध। हृदयङ्गमः परिहासः।

काम। तदाख्यतां, किञ्चिदाख्येयमाख्यातुकामास्मि।

[सर्वा उपविशन्ति।]

काम। [मालत्याश्चिबुकमुन्नमय्य।] शृणु विचित्रमिदं, सुभगे!।

माल। अवहिदह्मि। (थ)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वामिव मामकीनस्य मनसो द्वितीयं निबन्धनम्।

लव। सुमरामो। (द)

(त) सोढव्यं भगवत्या आयासम्।

(थ) अवहितास्मि। (द) स्मरामः।

अनुपमं सम्यक् भोग्यं ईक्ष इति यावत्। तेन चयं यतः कुमुदा मुकुला यस्य स कदम्बः नीपकुसुमं तस्य कम्परः समूहः विकाशयति चतुर्दिक्षु।

(८) स्खलयतीति। हे सुभ्रु! उत्कृष्टभ्रुके! मालति! खेदः श्रमः ते तव वचनं स्खलयति वाक्स्खलनं करोति अङ्गमङ्गं प्रत्यवयवं संश्रयति व्याप्नोति मुख-चन्द्रं उद्भासयन्तीति तान् स्वेदबिन्दून् घर्मजलकणान् जनयति नेत्रे च मुकुल-

काम। स खलु मन्मथोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः, परवानिव शरीरोपतापेन।

यदिन्दावानन्दं, प्रणयिनि जने वा, न भजते,
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि, चापाण्डुमधुरम्
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ (९)

लव। एवम्पि तस्सिं अवसरे भअवदीं तुवराअन्तीए, अवलोइदाए उदीरिदं आसि, जधा अस्सत्थसरीरो माहवोत्ति (ध)।

काम। यावदस्मृणवं, मालत्येवास्य मन्मथोन्मादहेतुरिति, ममापि स एव निश्चयः।

अनुभवं वदनेन्दुरुपागमन्नियतमेव यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः॥१०॥

---

(ध) एवमपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितयोदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

---

यति निमीलयति सर्वथा सर्वप्रकारैश्च बहुभावालोकनेन माधवदर्शनेन तुल्यं निर्विशेषं यथा तथा विलसति। एवञ्च माधवकर्णपूरदर्शनेन त्वम् अतितरां खिद्यसि माधवोऽपि मालतीदर्शनेन खिन्नोऽजातः। तेनोभयोः साम्यावस्था उक्ता।

(९) यदिति। इन्दौ चन्द्रे, प्रणयिनि जने प्रियतमजने वा यत् यस्मात् आनन्दं हर्षं न भजते तस्मादयमतिधीरो विवेकशीलोऽपि विषमं अन्तस्तापं व्यनक्ति प्रकाशयति। एतदाकारदर्शने अस्यान्तर्गततापः सहजानुमेय इत्यर्थः। प्रियङ्गुश्यामाङ्गप्रकृतिरपि प्रियङ्गुफलवत् श्यामलया तद्वत् शीतलप्रकृतिर्माधवोऽपि आपाण्डु सम्यक् पाण्डुरवर्णत एव मधुरं सुन्दरं वपुः क्षामं क्षामं अतिकृशञ्च इति आभीक्ष्ण्ये द्विर्भावः। वहति धारयति तथा रमणीयश्च भवति। विरहावस्थायां माधवमवलोक्य पूर्वापेक्षया नूतन इव भाति।

(१०) अनुभवमिति। वदनेन्दुर्मुखचन्द्रः मालत्या इत्यर्थः। अनुभवं विना

माल। [ स्वगतं। ] अदिदुक्करं करेदि। (न)

काम। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदपि अन्यत्र अपरिक्लिष्टपूर्वस्तपस्वी, यतोऽधुना प्रक्रममनेन मरणमपि अनुभवितुम्।

माल। [ जनान्तिकं। ] सहि! अत्तणो कारणादो तस्स सव्वलोआलङ्कारभूदस्स, किम्पि आसङ्कन्तीए भअवदीए भीदाविदह्मि, ता किं दाणिं एत्थ पडिवज्जिस्सं (प)।

माध। दिष्ट्यानुकम्पितोऽस्मि भगवत्या।

लव। भअवदी एव्वंवादिणीत्ति आअक्खीअदि, अह्मा-णम्मि भट्टिदारिआ, भअणासअरच्छामुहमुहुत्तमत्तणस्स, तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ, रविकिरणासिलिट्ठ-मुह-कमलिणी-कन्द-सुन्दरावअव-सोहा विभाविदाणङ्ग-वेअणा-णिब्भर-रमणीआवि, परिअणं दूणेदि। णाभिणन्दिद केलि-कलाओ, केवलं कमलाअमाण-कन्तहत्थ-पल्लवत्थ-गण्ड-मण्डला दिअसाइं गमेदि। अविअ। विअसिआरविन्द-मअरन्द-णिस्सन्द-सुन्दरेण, दर-दलिअ-कुन्द-माअन्द-मउ-बिन्दु-सन्दोह-वाहिणा, भअणुज्जाणपेरन्त-मारुदेण उत्तम्मदि।

---

(न) अतिदुष्करं करोति।

(प) सखि! आत्मनः कारणात्तस्य सर्वलोकालङ्कारभूतस्य, किमपि आशङ्कमानया भगवत्या भीतापितास्मि, तत् किमिदानीमत्र प्रतिपत्स्ये।

(फ) भगवती, एवं वादिनी इति आख्यायते, अस्माकमपि भर्तृदारिका, भवना-सन्नरथ्यामुखमुहूर्तमात्रदर्शनस्य, तस्यैव बहुशोऽनुभूतदर्शना भूत्वा, रविकिरणाश्लिष्टमुख-कमलिनीकन्दसुन्दरावयवशोभा विभावितानङ्गवेदनानिर्भररमणीयापि, परिजनं दुनोति नाभिनन्दति केलिकलाः, केवलं कमलायमानकान्तहस्तपल्लवन्यस्तगण्डमण्डला दिवसानि गमयति। अपिच। विकसितारविन्दमकरन्दबिन्दुसन्दोहवाहिना

रमणकेलिकलहकोवोवराअपल्लविअकेरलीकवोलकोमलुव्वेल्लन्तविमलचन्दचन्दिओद्दामदलिदतिमिरावरणाइं विहावरीमुहाइं। इमे अ उल्लसिददुद्धसिन्धुपूरधवलुज्जलजोह्णाजलपक्खालिदगअणांगणा, परिमलिदपाडलाबउलणिम्महन्तबहलपरिमलुग्गारमन्थलणमसिणमंसलाअन्तमलअमारुदधूमाविददहदिसामुहा वसन्तरअणीपरिणाहा अणत्थकारिणो भविस्समन्ति पिअसहीए त्ति * (फ)।

काम। लवङ्गिके!

यदि तद्विषयोऽनुरागबन्धः स्फुटमेतद्धि फलं गुणज्ञतायाः।
इति नन्दितमप्यवस्थयाऽस्या हृदयं दारुणया विदार्यते मे॥ (१२)

---

इमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमलोद्वेल्लद्विमलचन्द्रचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि। एते च उल्लसितदुग्धसिन्धुपूरधवलोज्ज्वलज्योत्स्नाजलप्रक्षालितगगनाङ्गणाः परिमलितपाटलाबकुलनिर्मथनबहलपरिमलोद्गारसंवलनमसृणमांसलायमानमलयमारुतधूमायितदशदिङ्मुखाः वसन्तरजनीपरिणाहाः अनर्थकारिणो भविष्यन्ति प्रियसख्या इति।

---

प्रियसख्याः कदर्थिका भविष्यन्तीत्यन्वयः। उपरागो लौहित्यम्। पल्लवितः पल्लवाकारीकृतः। केरली केरलदेशस्त्री। तस्या अतिगौरत्वेन लौहित्याधिक्यम्। उद्वेल्लत् पतत्। उद्दामदलितमतिदारितम्। इह कटकेरलीकपोलसाम्यमादितचन्द्रस्य तिमिरावरणनाशे रक्तिमप्रकाशः कवितश्चन्द्रस्य दुःसहता माधव्या ख्यापिता। परिमलितं क्षतम्। निर्मथनं मर्दनम्। उद्गार उद्गमः। संवलनं निर्गमनम्। मसृणं मन्दम्। मांसलः पुष्टः। धूमायितं धूमेनेवाकुलीकृतम्। परिणाहः आभोगः।

(१२) यदीति। अनुरागबन्धः प्रेमभावः यदि तद्विषयः अविषयो यस्य स तादृशः स्यात् तदा एतद्धि निश्चयं गुणज्ञतायाः फलं स्फुटमित्युत्प्रेक्षायाम्।

कामन्दकीमाधवौ। [ सभयं। ]—हृदय पशुना हतः

इतराः। अच्चाहिदं! अच्चाहिदं! (य)

कामन्दकीमाधवौ। [सहर्षं।]—प्रमथितश्च दंष्ट्रायुधः॥ (१८)

इतराः। [ सानन्दं। ] दिट्ठिआ पडिहदं दुज्जादं। (र)

काम। [ साकूतं। ] कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः, क्षितितलनिषण्णखड्गलतावष्टम्भनिश्चलः, संभ्रान्तमदयन्तिकावलम्बितः ताम्यतीव वत्सो मे मकरन्दः।

इतराः। हद्धी! हद्धी! गाढप्पहारदाए किलम्मदि महाभाओ (ल)।

माध। कथं प्रमुग्ध एव। [ कामन्दकीं प्रति। ] भगवति! मां परित्रायस्व।

काम। प्रतिकान्तरोऽसि। तदेहि तावत्पश्याव।

[ इति परिक्रम्य निष्क्रान्ताः सर्वे। ]

इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः।

---

(य) अत्याहितमत्याहितम्।

(र) दिष्ट्या प्रतिहतं दुर्जातम्।

(ल) हा धिक्! हा धिक्! गाढप्रहारतया क्लाम्यति महाभागः।

---

पातितान् तेन प्राणिं च अवपातितान् गृहीतान् कृतोऽपि पुरुषान् अभिनतायुधः प्राणिमुख. ग्रहमेव एष आगत्य मकरन्दः मध्ये स्थितः। तथा हृदं च यथा तथा पशुना व्याघ्रेण हतः ताडितः मकरन्द इति भावः। दंष्ट्रायुधो व्याघ्रश्च प्रमथितो व्यापादितः।

# चतुर्थोऽङ्कः।

ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ मूर्च्छितौ माधवमकरन्दौ, ससम्भ्रमा कामन्दकी मालती बुद्धरक्षिता च।

मद। पसीद भअवदि! परित्ताहि परित्ताहि मदअन्तिआणिमित्त-संसइदजीविदं आवण्णजणाणुकम्पिणं महाभाअं (क)।

इतरा:। हद्धी! हद्धी! किं दाणिं अह्मेहिं एत्थ पेक्खिदव्वं। (ख)

कामन्दकी। [उभौ कमण्डलूदकेन सिक्त्वा।] ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु।

[मालत्यादयस्तथा कुर्वन्ति।]

मक। [समाश्वस्यावलोक्य च।] वयस्य! कातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि।

मद। [सहर्षं।] अच्चरिअं! पडिवुद्धं दाणिं मअरन्दपुण्णिमाचन्देण (ग)।

माल। [माधवस्य ललाटे हस्तं दत्त्वा।] सहि लवङ्गिए! दिट्ठिआ वड्ढसि, जं भणामि, पडिबुद्धो ज्जेव्व दे पिअवअस्सो, पडिवण्णचेअणो महाभाओ मअरन्दोत्ति (घ)।

---

(क) प्रसीद भगवति! परित्रायस्व, मदयन्तिकानिमित्तसंशयितजीवितमापन्नजनानुकम्पिनं महाभागम्।

(ख) हा धिक्! हा धिक्! किमिदानीमस्माभिरिह प्रेक्षितव्यम्।

(ग) आश्चर्यं! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण।

(घ) सखि लवङ्गिके! दिष्ट्या वर्धसे यद्भणामि प्रतिबुद्ध एव ते प्रियवयस्यः प्रतिपन्नचेतनो महाभागो मकरन्द इति।

माध। [आत्मगतम्।] वयस्य! समाश्वसिहि! एह्येहि।

[इत्यालिङ्गति।]

काम। [उभौ निरवलोक्य।*] दिष्ट्या जीवितवत्सास्मि।

इतराः। पिअं पिअं णो संवुत्तम्। (क)

[सर्वा हर्षं नाटयन्ति।]

बुद्ध। [जनान्तिकम्।] हला मदअन्तिए! एसो क्खेव सो।† (ख)

मद। तदा जेव्व जाणिदं मए, जधा एसो माहवो, अअंपि सो जणोत्ति ‡ (ग)।

बुद्ध। अवि, सच्चवादिणी अहम्?। (घ)

मद। ण क्खु अम्हारिसेसु तुम्हारिसीओ पक्खवादिणीओ होन्ति।¶ [माधवमवलोक्य।] सहि! मालदीए वि रमणीओ इमस्सिं महाणुहावे अणुराअप्पवादो (ङ)।

---

(क) प्रियं प्रियं नः संवृत्तम्।

(ख) सखि मदयन्तिके! एष एव सः।

(ग) तदैव ज्ञातं मया यथा एष माधवः अयमपि स जन इति।

(घ) अपि सत्यवादिनी अहम्।

(ङ) न खलु अस्मादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति। सखि! मालत्या अपि रमणीय एतस्मिन् महानुभावेऽनुरागप्रवादः

---

* निरवलोकनमावृतवदनावेति यावत्।

† हलेति सखीसम्बोधनम्। मकरन्दनामश्रवणेन ज्ञातिमत्त्वमिति।

‡ सखावगमादवगतिकथनम्।

¶ न हि पक्षपातिन्यस्त्वादृश्यो मन्दं भद्रं वदन्तीति भावः।

[ पुनर्मकरन्दमेव सस्नेहमवलोकयति । ]

काम। [स्वगतम्। ] रमणीयोर्जितं * हि मदयन्तिकामकरन्दयोर्दैवादस्य दर्शनम्। [प्रकाशम्। ] वत्स मकरन्द ! कथं पुनरत्रानुपानीयावसरे मदयन्तिकाजीवितत्राणमहाभागवता दैवेन सन्निधापितः।

मक। अत्राहमन्तर्नगर एव काञ्चिद्वार्त्तामुपश्रुत्य, माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः, परापतन्नेव शार्दूलावस्कन्दमोचनतामेतामभिजातकन्यकामभ्युपपन्नवानस्मि ।

[ मालतीमाधवौ विशतः † । ]

काम। [ स्वगतम्। ] अनेन खलु मालतीप्रदानेन भवितव्यम्। [प्रकाशम्। ] वत्स माधव ! दिष्ट्या सुहृदभ्युदयेन वर्द्धितोऽसि मालत्याः, तदयमवसरः प्रीतिदायस्य ‡।

माध। भगवति ! इदं हि।

यद् व्यालम्बितसुहृत्प्रमोदमुग्धं
सौजन्यादिहिहितवती गतव्यथं माम्

---

* रमणीयत्वेन रमणीयम्। शार्दूलनाशेन उपकारपूर्वकमुत्पन्नत्वादूर्जितं शास्तिमयम्। अनुपानीयेति शब्देन वाच्यो भावः प्रमाणम्। इति भरतः।

† उद्यानस्थानी मालतीमाधवमुपरिपक्वम:। परापतन्नागच्छन्। अवस्कन्दोऽभिक्रमः। अभिजाता कुलीना। तथा चाभिजात्येन मदुपकारं ज्ञास्यतीति भावः। आभिजात्येन ज्ञानं च तथाविधाकारादिना। कन्यकेत्यनानुकम्पायां कन्। अभ्युपपत्तिः प्राप्तिः। विशतः। परस्परं मकारिकामस्पर्शेति भावः।

‡ प्रीतिदायस्य वर्धापनदानस्य।

(१) मदयन्त्याः आर्त्तेन विभज्यनुना अविनो वः शुद्धम् बान्धवः यस्य वः

तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयस्य जीवितस्य ॥ १ ॥

लव। पडिच्छिदो क्खु णो पिअसहीए अअं पसादो (ञ)

मद। [स्वगतम्] आणादि महाभाअधेओ अण्णो अवसरे गुरुअरमपिअं * मन्तिदुम् (ट)।

माल। [स्वगतम्।] किं णाम मअरन्देण उस्सेअआरअं सुदं भविस्सदि? (ठ)।

माध। वयस्य! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता † ?

[प्रविश्य पुरुषः।] वत्से मदयन्तिके! भ्राता ते ज्यायान् अमात्यनन्दनः समादिशति, अद्य परमेश्वरेण पक्षग्रहण-मागत्य, भूरिवसोरुपरि परं विश्वासमध्यारोप्य च प्रसादमाविष्कुर्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोदमिति ‡।

---

(ञ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः।

(ट) आज्ञापयति महाभागधेयो अन्योऽवसरे गुरुतरमप्रियं मन्त्रयितुम्।

(ठ) किं नाम मकरन्देन उद्वेगकारकं श्रुतं भविष्यति।

---

प्रमोदः येन मुग्धं मूर्च्छितम् मां जीवनात् सततं स्वस्याविरहेण विरहितवती चकार, तत् तस्मात् पूर्णपात्रवृत्त्या सम्प्राप्ती हर्षाविष्टपूर्णपात्रवृत्त्येव मम हृदयस्य जीवितस्य स्वीकर्तुमात्मसात्कर्तुं कामं यथा तथा प्रभवति समर्थो भवति।

* गुरुतरमप्रियं शोकदुःखदम्।

† मकरन्देन काचिद्वार्त्तामुपलभ्यैवेति यदुद्वेगलक्षणमानः पृच्छति। वय-स्येति।

‡ ज्यायान् ज्येष्ठः। परमेश्वरो राजा। विश्वासम् धनेदम्। सम्भावयामः कारयामः। उत्सवपूर्वको हर्षः प्रमोदः।

मक। वयस्य ! सेयं वार्त्ता ।

[ मालतीमाधवौ वैलक्ष्यं नाटयतः । ]

मद। [ मालतीं सहर्षमालिङ्ग्य । ] सहि मालदि ! तुमं क्खु एक्कणअरणिवासिणा सहपंसुकीलणादो पहुदि मे पिअसही आसि बहिणिआ अ, सम्पदं उण णो घरस्स मण्डणं जादासि (ड) * ।

काम। वत्से मदयन्तिके ! दिष्ट्या वर्द्धसे भ्रातुर्मालतीलाभेन ।

मद। भअवदि ! तुह्माणं आसिसां पहावेण । लवङ्गिए ! फलिदा णो मणोरहा तुह्माणं लाहेण (ढ) † ।

लवं। सहि ! किं अह्माणम्पि अत्थि मन्तिदव्वं (ण) ।

मद। सहि बुद्धरक्खिदे ! दाणिं विवाहमङ्गलं सम्भावेह्म । (त)

बुद्ध। सहि ! एहि गच्छह्म । (थ) [ इत्युत्तिष्ठतः । ]

---

(ड) सखि मालति ! त्वं खलु एकनगरनिवासिना सहपांशुक्रीडनात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनर्नो गृहस्य मण्डनं जातासि ।

(ढ) युष्माकमाशीःप्रभावेण । सखि लवङ्गिके ! फलिता नो मनोरथा युष्माकं लाभेन ।

(ण) सखि ! किमस्माकमपि मन्त्रयितव्यम् ।

(त) सखि बुद्धरक्षिते ! इदानीं विवाहमङ्गलं सम्भावयावः ।

(थ) सखि ! एहि गच्छावः ।

---

* अद्य गृहभूषणभूतासीति भावः ।

† नोशब्दोऽस्मदर्थे निषेधे च तुल्यवत् इति निषेधोऽत्र न इति । अत एव नोऽस्माकम् । भ्रातुरित्यादि ।

लव । [ जनान्तिकम् । ] भअवदि ! जहा एदे हिअअ-भरिदुव्विस्सविब्भमाणन्द-सुन्दरा- दोलिद-धीरत्तण-मणोहरा, पहुत्थन्ति मदअन्तिआमअरन्दाणं दरदलिदणीलुप्पलदाम-सरिच्छा कडक्खविक्खेवा तह तक्केमि मणोरहणिव्वुत्तसम्बन्धा एदेत्ति । (८)

काम । [ विहस्य । ] ननु इमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवतः ।

तथाहि । ईषत्तिर्य्यग्वलितविषमं कुञ्चितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकुञ्चितभ्रु ।
अन्तर्मोदानुभवमसृणं स्तब्धनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् ॥ (९)

---

(८) भगवति ! यथैते हृदयभरितोद्वर्त्तिविभ्रमानन्दसुन्दरान्दोलितधीरत्व-मनोहराः परिवर्त्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपाः तथा तर्कयामि मनोरथनिर्वृत्तसम्बन्धावेताविति ।

---

(९) ईषदिति । ईषत् तिर्य्यक्वलितविषमं ईषत् अल्पं तिर्य्यक् वलितेन विषमं किञ्चित् वक्रिमभावापन्नं कुञ्चितप्रान्तं कुञ्चितो मुद्रितः प्रान्तः प्रान्तभागः यस्य तत् प्रेमोद्भेदस्तिमितलुलितं प्रेमोद्भेदेन अनुरागोदयेन स्तिमितं निश्चलं स्थिरमित्यर्थः । अतएव लुलितं मनोहरमित्यर्थः । किञ्चिदाकुञ्चितभ्रु किञ्चिदाकुञ्चिते उन्नमिते भ्रुवौ यत्र तत् मदनसमुचितं तदनयोर्नर्मोक्तिभावः । अन्तर्मोदानुभवमसृणं अन्तर्मोदस्य आन्तरिकहर्षस्य अनुभवेन ज्ञानेन मसृणमनुज्ज्वलं, स्तब्धनिष्कम्पपक्ष्म स्तब्धानि अनुत्क्षेपणादिक्रियारहितानि निष्कम्पानि पक्ष्माणि यत्र तत् आकेकराक्षं आकेकरं ( ट्यारा ) इति प्रसिद्धम् अक्षि यत्र तत् अनयोर्दृष्टम् अचिरं झटिति व्यक्तं स्फुटं मनोगतं प्रमोदं शंसति कथयतीति प्रतीयमानोत्प्रेक्षा । अनयोः परस्परदर्शनसुखपारवश्येन कल्पितमित्यादिना सुखव्यञ्जकानुभवेन च प्रेमातिशयं भवति ।

तथाप्यस्मिन् दानवचनसमयेऽस्याः प्रविगल-
दयं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ (४)

काम । [ स्वगतम् । ] एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो, वत्सा मालती च । दुष्करं निराशा प्राणितीति । [ प्रकाशम् । ] पृच्छामि तावदायुष्मन्तं, अपि भवान् अमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति ? ।

माध । [ सलज्जम् । ] नहि नहि ।

काम । न तर्हि प्रागवस्थायाः परिहीयसि ?

मक । भगवति ! दत्तपूर्वेत्याशङ्क्यते ।

काम । जानासि तां खलु वार्त्तां, इदन्तु प्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुं पतिमुक्तवान्, प्रभवति निजस्य कन्यकाजनस्य महाराज इति ।

मक । अस्त्येतत् ।

काम । अस्य च स्वयं राज्ञैव दत्ता मालतीति पुरुषेणावेदितं, तद्वत्स ! श्रुति प्रतिष्ठानिबन्धनानि देहिनां व्यवहारतन्त्राणि, वाचि पुण्यापुण्यहेतवो व्यवस्थिताः, सर्वस्य वचनानामायत्तं, सा च भूरिवसोर्वागनृतात्मिकैव, न खलु महा-

(४) तथापीति । विधौ दैवे वामाचरणे प्रतिकूले सति अनुरूपं दुर्लभं जनं समागमेनात्यं तुच्छमिव प्रार्थितवती याचमानस्य मम एषा इति शेषेण मर्दनः । परिवर्तितः दशापरिवर्तनं समुचिता युक्तैव । तथापि तादृशदशाकालेऽपि अस्मिन् दानवचनसमये अधुना दानवचनकाले अस्याः प्रविगलत्प्रभं दीप्तिशून्यं प्रातश्चन्द्रद्युति प्रभातकालीनचन्द्रतुल्यकान्तिविशिष्टं वदनं मुखं मामन्तर्दहति अन्तस्तापयति एतदेवैकं वैषम्यमस्य जातमित्यर्थः । आदौ दुर्लभजनप्रार्थनैव अनुचिता, ततो विधौ तु प्रतिकूले अनुचिततरं दुर्लभजनप्रार्थनमिति भावः ।

[ नेपथ्ये । ] भअवदि कामन्दइ! एसा महिसी विण्णवेदि. जधा मालदीं घेत्तूण तुरिदमाअच्छदु त्ति (प)।

काम। वत्से! उत्तिष्ठ। [ सर्वे उत्तिष्ठन्ति। ]

[ मालतीमाधवौ एकदृष्ट्यानुरागमन्योऽन्यमवलोकयतः। ]

माध। [ स्वगतम्। ] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः।

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो विधिरहो विशिनष्टि मनोरथम् ॥७॥

माल। [ स्वगतम्। ] महाभाअ! लोअणाणन्द! एत्तिअं दिट्ठोसि। (फ)

लव। हद्धी! हद्धी! शरीरसंसग्गं जेव्व णो पिअसही आरोविदा अमच्चेण (ब)।

माल। [स्वगतम्] परिणदं दाणीं मे जीविदतिण्हाए फलम्।

---

(प) भगवति कामन्दकि! एषा महिषी विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

(फ) महाभाग लोचनानन्द! एतावद्दृष्टोऽसि।

(ब) हा धिक् हा धिक् शरीरसंसर्गमेव नः प्रियसखी आरोपिता अमात्येन।

---

(७) प्रथमम् आदौ एकरसां निरन्तरां अनुकूलतां आनुकूल्यं सुहृदिव बन्धुः इव प्रकटय्य प्रकाश्य सुखप्रदः सुखदायी सन्! आश्चर्यम् विधिः पुनः पश्चात् अकाण्डे अकस्मात् अकाण्डविवर्त्तनं दशापरिवर्त्तनं अनीतिभिः तेन दारुणः कठिनः सन् मनसः चित्तस्य रथम् अर्थं विशिनष्टि प्रतीपि अपनयतीत्यर्थः।

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरम्,
ललितचरणन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥ (६)

[ निरूप्य । ] अये ! स एव कामन्दकीसुहृत्पुत्रो महा-मांसस्य पणयिता माधवः । तत्किमनेन, भवतु समीहितं सम्पादयामि विगलितप्रायश्च पश्चिमसन्ध्यासमयः ।

तथाहि सम्प्रति ।

ज्योत्स्नापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्म्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।

---

चिह्नः । चिदितमुपलक्षणम् । चिह्नितमिति पाठेऽन्वितम् । गम्भीरेत्यादि । विकाराः सहजा यस्य हर्षक्रोधभयादिषु । भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥ इति । अभ्यासात् करणानां तु स्थिरत्वमुपजायते । महत्स्वपि विकारेषु तद्गाम्भीर्यमुदाहृतम् ॥ इति भरतः । उन्नमितो जूटाकारेण बद्धः कुटिलो वक्रः कुन्तलः केशो यस्य सः । एतेन रौद्ररसवर्णना ।

(६) कुवलयेति । कुवलयदलश्यामः नीलकमलदलस्निग्धश्यामोऽपि परिधूसरं धूसरवर्णं अङ्गं दधत् दधानः । चितिकादौ पतनात् धूसरत्वम् । ललितः सुन्दरः चरणन्यासः पादक्षेपः यस्य सः । श्रीमान् सुन्दरः मृगाङ्कनिभाननः चन्द्राननः । ललत् चपलं नरजाङ्गलं महामांसं यत्र सः तथा प्रविगलदसृक्पङ्कः । प्रविगलन्ति क्षरितानि असृञ्जि रक्तानि पङ्कानि इव यस्मात् स बहुरुधिरपङ्किल इति यावत् अतएव प्रकाशितसाहसः व्यक्तीकृतसाहसः यस्य माधवस्य वामः सव्येतरः प्रतिकूलश्च पाणिः करः विनयं माधवनिष्ठस्वाभाविकविनयगुणं हरति नाशयति । एतादृशकर्मदर्शने भीतिरिव जायते सुतरां विनयशालित्वं नास्ति इत्यर्थ इति भावः । अत्र सुन्दरोऽप्यसुन्दर इत्याद्यर्थसद्भावादर्थापत्तिरलङ्कारः ।

(७) ज्योत्स्न इति । ज्योत्स्नः पर्यन्ता आकाशसीमानः तापिच्छानां तमाल-वृक्षाणां गुच्छावलिभिः स्तबकश्रेणिभिरिव न तु तदवयवैः तदपेक्षया निबिडान्धकारत्वमन्धकारत्वमिति भावः । तमोवल्लरीभिः तमःपटलैर्म्रियन्ते कर्मणि लट् । अनन्तरं

किञ्च । अतिमुक्तमदग्रथितकेशरावली-

सतताधिवाससुभगार्पितस्तनम् ।

अपि कर्णजाहविनिवेशिताननः

प्रियया तदङ्गपरिरम्भमाप्नुयाम् ॥ (९)

अथवा । दूरे तावदेतत् इदमेव प्रार्थये ।

सन्त्येव सुखानि चेतसि परं भूमानमातन्वते,

यन्नालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।

यद् बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्,

तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ (१०)

यत्सत्यमधुना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेषः ।

---

(९) अतीति । अतिमुक्ताया भ्रष्टाया मुक्तारहितायाश्च मदयन्तिकाया उभयस्य सम्भु निर्मिताया: केशरावल्या बकुलस्य मालायाश्च य: सतताधिवास: देहनियतावस्थानं अन्यच्च य: गाढ़परिमल: तेन सुभगं यथा भवति तथा उभयत्रैव रमणीयमित्यर्थ: । अर्पितस्तनं न्यस्तकुचं तस्या: अङ्गपरिरम्भं अङ्गस्य परिवर्त्तनं एकत्र कार्य्यादिनाऽन्यत्र पार्श्वपरिवर्त्तनं अहं कर्णजाहे कर्णमूले विनिवेशिताननः न्यस्तमुख: सन् प्रियया सह आप्नुयां लभेयं ममापि तद् भवतु इत्यर्थ: । प्रियाकर्णमूले मुखं न्यस्य तदङ्गपरिवर्त्तनजन्यसुखदुःखोभयविधाकारमस्पृहं अनुभविष्यामीति भाव: ।

(१०) सन्त्येति । सुखानि सन्त्यपि सन्त्येव निश्चितमेव चेतसि मदन्त:करणे परं भूमानं अतिशयाधिक्यं परिमिति क्रियाविशेषणं वा आतन्वते कुर्वन्ति । मनसि महान् सुखोदयो जायते इत्यर्थ: । यत्र अमी मालतीरूपे आलोकपथावतारिणि दर्शनपथे वर्त्तमाने दृष्टे इति यावत् नेत्रोत्सव: तद्दर्शनजन्यनयनयोरुत्सवं रतिमनुरागं प्रस्तौति आचरति । बालेन्दुकलोच्चयात् नवविधुकलासमूहादित्यर्थ:, एतेन मालत्या: सर्वाङ्गीनशीतलत्वमुक्तम् । अवचितै: उद्धृतै: सारै: सारांशै: उत्पादितं विरचितमिव अनङ्गमङ्गलगृहं मदनमनोहरावासगृहमिव स्थितमित्यर्थ: । यत् तस्या: प्रियाया मुखं तत् पश्येयं द्रक्ष्यामीत्याशंसा ।

मम हि सम्प्रति सातिशयप्राणोपलम्भसम्भावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशप्रत्ययान्तरैः अतिरस्कृतप्रवाहः, प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानः तन्मयमिव करोति अन्तर्वृत्तिसारूप्यतश्चैतन्यम्। * तथाहि।

लीनेव प्रतिबिम्बितेव, लिखितेवोत्कीर्णरूपेव च,
प्रत्युप्तेव च, वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया॥ (११)

[ नेपथ्ये कलकलः। ]

---

* [illegible]। ममेति। मामकीनः प्रियाकारस्मृत्युत्पत्तिसन्तानः परिव्याप्तिसमूहः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति मालतीमयं करोतीत्यर्थः। कीदृशः। प्रतायमानो दीर्घीभवन्। अत्र हेतुः। संस्कारस्य भावनाया अतिशयितप्रबोधादुद्रेकात्। कीदृशस्य संस्कारस्य। सातिशयात्प्रादरात् स्फुटाकाराद्वा बकुलवीथ्यां पूर्वकालानुभवाज्जन्म यस्य। प्रतायमानत्वमेवोपपादयति। तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैः अतिरस्कृतप्रवृत्तिः। तथा च अन्तरा विषयान्तरास्फुरणाच्च प्रवाहस्याविच्छेद इति भावः। आत्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह। अन्तरिति। अन्तःपदमिह बुद्धितत्त्वपरम्। तथाच बुद्धितत्त्वस्य या प्रवृत्तिः सरूपा व्यापारः सा यत आत्मतत्त्वे भेदाग्रहात् प्रतिभासते तस्मात्। सारूप्यदर्शने हेतुमाह। यद्वा। अन्तर्वृत्तिरिति भावप्रधानम्। तथा अन्तर्वृत्तित्वमन्तःकरणवर्तित्वं सारूप्यं सादृश्यमात्मवृत्तित्वात्।

(११) लीनेवेति। सा प्रिया मालती नोऽस्माकं चेतसि लीनेव प्रतिबिम्बितेव, लिखितेव मुद्रितेव उत्कीर्णरूपेव, उत्खचितेव, बहिरानीतेव, प्रत्युप्तेव रोपितेव वज्रलेपेन घटितेव सम्पादितेव अन्तरन्तःकरणे निखातेव चेतोभुवः कामस्य पञ्चभिर्विशिखैर्बाणैः कीलितेव विद्धेव तथा चिन्तासन्ततिश्चिन्ताप्रवाहः, सैव तन्तूनां तन्तुसमूह उपादानकारणमित्यर्थः तेन निबिडं घनं यथा भवति तथा स्यूतेव रचितेव।

माध। अहो! सम्प्रति प्रगल्भमानकौणपनिकायम् महती श्मशानवाटस्य रौद्रता। अस्मिन् हि

पर्यन्तप्रतिरोधिमेदुरघनस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः।
संसक्ताकुलकेलयः किलकिलाकोलाहलैः सम्मदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥ (११)

भवतु आघोषयामि तावत्। भो! भोः श्मशाननिकेतनाः कट-पूतनाः!

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं, गृह्यतां गृह्यतामिदम् ॥ (१२)

[ पुनर्नेपथ्ये कलकलः। ]

माध। कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्ताल-वेतालमुक्ततुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूत-सङ्कटः श्मशानवाटः। आश्चर्यम्!

---

(११) पर्यन्तेति। पर्यन्तप्रतिरोधिभिः सीमावरकैः मेदुरघनैः मांसलसङ्घैः स्त्यानं कठिनं चिताज्योतिषां चितानलानामौज्ज्वल्यं कर्तृ परभागतः गुणोत्कर्षात् आभोगभीमं आभोगेन दृष्ट्या भीमं करालं तमः कर्म प्रकटयति, तथा किलकिला-कोलाहलैः (किलकिलेत्यनुकरणशब्दः) तद्रूपचीत्कारैः उत्ताला उत्कटा भीमा इत्यर्थः। संसक्ताकुलकेलयः सङ्घातचपलक्रीडाः कटपूतनाप्रभृतयः श्मशान-वासिप्रभृतयः सांराविणं सम्यक् रौरवशब्दं कुर्वते जनयन्ति।

(१२) अशस्त्रेति। अशस्त्रपूतं शस्त्रैरनाविद्धं अव्याजं सुन्दरं पुरुषाङ्गोप-कल्पितं पुरुषाङ्गेन सम्पादितं इदं महामांसं शुष्कमांसमित्यर्थः। मालतीमन्तरेण अशरीरधारणे फलाभावात् शुष्कमिति भावः। हैमं इति तथा कापि मद्यकर्मी न दीयते इत्यनुशासनादिति। विक्रीयते दीयते तदुद्गृह्यतां गृह्यतामित्यर्थः। इष्टाविशि पवित्रस्य वाक्यात् यदुपार्जितम्। अशस्त्रपूतं निर्व्याजमेतत् मांसं विदुर्बुधाः। इति परिभाषितमेव मांसं महामांसम्।

कपाल॰। तं भद्रे! स्मर दयितोऽत्र यस्तवाभू-
दषे त्वां त्वरयति दारुणः कृतान्तः *।

माल॰। हा दइअ! णाह माहव! परलोअगदो वि सुमरिदव्वो तुम्हेहिं अअं जणो, ण हु सो उवरदो, जस्स वल्लहो जणो सुमरेदि † (ग)।

कपाल॰। हन्त! माधवानुरक्तेयं वराकी तपस्विनी ‡।

अघोर॰। [शस्त्रमुद्यम्य।] यदस्तु, व्यापादयामि।

चामुण्डे! भगवति! मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम् ¶ ॥

---

(ग) हा दयित नाथ माधव! परलोकगतोऽपि स्मर्तव्योऽयं जनो युष्माभिः, न खलु स उपरतो यस्य वल्लभः स्मरति।

---

मित्यर्थः। विधिः सुकृतदुष्कृतः कर्मायत्तः कोऽयं प्रक्रम आरम्भ इत्यर्थः। एतद्दुर्विधिविलसितम् अन्यथा नैतत् घटितुं शक्यते।

* तं भद्रेत्यादि। प्रहर्षिणीच्छन्दः। श्लोकार्थम्। चामुण्डे भगवतीत्याद्यभिप्रायेण। हे भद्रे! यस्तव दयितो वल्लभस्तं स्मर। युक्तत्वात् स्मरणस्य। यदाह। पतिरेको गुरुः स्त्रीणामिति। यद्वा। मदुपहरणीभवनेन स एव जन्मनि ते वल्लभो न भूत एव। अतो जन्मान्तरेऽपि तल्लाभाय तं स्मर। यदाह। यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः॥ इति। कृतान्तो यमः।

† स्मरणमाह। परलोकगतोऽपीति स्मर्तव्य इति। यस्य स्मरसि वा। मरणकाले माधवस्मरणं मुक्तिहेतुरिति कटाक्षितम्।

‡ हन्त खेदे। कामन्दकीमित्रपुत्र्यास्तथापि माधवानुरक्त एव। तदनुरक्ता वेयं कथं भवितेति खेद इति भावः। अतएव तपस्विनी अनुकम्प्या।

¶ उद्दिष्टां वाचा प्रतिज्ञाताम्। उपनिहितां निकटादुपढौकिताम्।

[ इति खड्गमुद्यच्छतः। ]

माध।

[ सहसोपसृत्य प्रकोष्ठे मालतीं निक्षिप्य। ]

दुरात्मन्! एष प्रतिहतोऽसि कापालिकापसद *! नन्वयं न भवसि।

माल। [ सहसावलोक्य। ] परित्ताअदु मं महाणुभाओ माहवो।

[ इति माधवमालिङ्गति। ]

माध। महाभागे! न भेतव्यम् भेतव्यम्।

मरणसमये त्यक्त्वा शङ्कां प्रतापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते।
सुतनु! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मन:
फलमनुभवत्युग्रं पाप: प्रतीपविपाकिन: ॥ (२५)

अघो। आः क एष पापोऽस्माकमन्तराय: संवृत्तः?।

कपा। मालत्या एवायमस्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो, महामांसस्य पण्यिता, माधवो नाम।

---

* कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः। विक्षिप्यापसार्य्य। खड्ग-हस्तेन बाहुमध्येऽपसारणम्। प्रतिहतो निराकृतः। अपसद! निन्दित!

(२५) मरणेति। मरणसमये शङ्कां भीतिमपहायेत्यर्थः। प्रतापेन निरर्गलः अप्रतिहतगतिः तथा प्रकटितः निजः स्नेहः येन स च इति कर्मधारयः। स दृष्टपूर्वः अयं दृश्यमान इत्यर्थः। ते तव सखा बान्धवः पुर एव वर्तते इति शेषः। अतएव हे सुतनु! शोभनाङ्गि! उत्कम्पं भयं विसृज्य अत्र सम्प्रति असौ पापकारित्वात् पापः अघोरघण्टः इत्यर्थः प्रतीपेन प्रतिकूलाचरणेन विपाकिनः परिपक्वस्य परिणामकठिनकर्मणः। पाप्मनः कलुषस्य उग्रं मरणरूपमुत्कटं फलमनुभवतु अनुभवत्वित्यर्थः।

माध । [ साश्चर्यम् । ] महाभागे ! किमेतत् ?

माल । [ चिरादाश्वस्य । ] महाभाअ ! अहं ण किम्पि जाणामि, एत्तिअं उण जाणामि, उवरिमलिन्दे पसुत्ता, इह-प्पबुद्धम्हि, तुम्हे उण कहिम् ? (घ) ।

माध । [ सलज्जं । ] त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय, परेतभूमा-
वाकर्ण्य, भीरु ! रुदितानि तवागतोऽस्मि ॥ (२६)

माल । [ स्वगतम् । ] हद्धी ! कधं मम कारणादो एव्वं एदे अप्पणिरवेक्खा परिक्कमन्दि (ङ) !

माध । अहो नु खलु भोः ! तदेतत्काकतालीयं नाम सम्प्रति स्थि ।

---

(घ) महाभाग ! अहं किमपि न जानामि, एतावदेव पुनर्जानामि, उपर्यलिन्दके प्रसुप्ता इह प्रबुद्धास्मि, यूयं पुनः क ? ।

(ङ) हा धिक् ! हा धिक् ! कथं मम कारणादिमेऽमी आत्मनिरपेक्षाः परिक्रामन्ति ।

---

(२६) त्वदिति । हे भीरु ! मालति ! तव पाणी एव पङ्कजे ताभ्यां यः परिग्रहः *वरणं स्वीकृतिर्वा । स एव पुण्यं तस्मात् जन्म यस्य तादृशः भूयासम् अहमिति शेषः । इत्यभिनिवेशेन दृढाग्रहेण कदर्थ्यमानः पीड्यमानो भ्राम्यन् चलन् पर्यटन् । नृमांसपणनाय नरमांसविक्रयाय परेतभूमौ श्मशा-ने तव रुदितान्याकर्ण्य श्रुत्वा आगतोऽस्मि ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः,
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ (१०)

अघोर। आः दुरात्मन्! प्रहर, नन्वयं न भवसि।

माल। पसीद णाह साहसिअ! दारुणो क्खु अअं हदासो, परित्ताहि मं पडिणिवत्तीअदु इमादो अणत्थसंसआदो * (च)।

कपा। भगवन्! अप्रमत्तो भूत्वा, दुरात्मानं व्यापादय †।

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति।

अयि भीरु!

धैर्य्यं निधेहि हृदये, हत एव पापः,
किं वा कदाचिदपि केनचिदन्वभावि।

(च) प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः, परित्रायस्व मां प्रतिनिवर्त्यतामस्मादनर्थसंशयात्।

(१०) पुनरपि दोषमुद्भाव्य दण्डं विकीर्षुराह। वपुषीत्यादि। हे पाप! तव शिरसि एष भुज आकस्मिकयमदण्ड इव पततु। आकस्मिकत्वेनाप्रतिक्रियत्वमुक्तम्। कीदृशस्य तव। तत्र वपुषि अतिसुकुमारे मालतीशरीरे वधाय शस्त्रम् उपक्षिपतः उत्तोलयतः। अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योऽसीति शौर्य्यातिशय उक्तः। यत् मालत्याः वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति म्लायति। कीदृशैः। मदनमहोत्सवविलासपरिहासरसप्रासैः अपि। अत्रापि शृङ्गारवीररसयोः सम्भेदः।

* अत्र त्वज्जीवने मम जीवनमपि सफलम्। अन्यथा तु मरणमेव वरमिति भावः।

† मालतीव कपालकुण्डलापि अनाथमाह। भगवन्निति। अवहितार्थम-प्रमत्त इति।

(११) अथोक्तं मालतीमाश्वासयन्नाह। धैर्य्यमित्यादि। हे भीरु! त्वं हृदये

माल । हा ताद ! हा भअवदि ! (क) * ।

माध । भवतु, बान्धवसमाजसुखितां मालतीं विधाय, तत्समक्षमिमं दुरात्मानं व्यापादयामि ।

[ मालतीमन्यतः कापालिकमन्यतः प्रेरयन् परिक्रामति † । ]

माधवाघोरघण्टौ । [अन्योन्यमुद्दिश्य । ] आः पाप !

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः,
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः ।
निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥ (१२)

इति निष्क्रान्ताः सर्वे ।

मालतीमाधवे पञ्चमोऽङ्कः ।

---

(क) हा तात ! हा भगवति !

---

पौरुषं पुरुषस्य व्यापारस्तेजो वा । पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसीति विश्वः ।

* मालती तस्यावेगातिशयादाह । हा तात ! हा भगवति ! इति ।

† मालतीरक्षार्थं कापालिको सखा हत इति अमात्यौ जानातु इत्याशयेन मालतीं च कातरां वीक्ष्याह भवत्विति । बान्धवेत्यादिना भाविकार्योपक्षेप उक्तः । अन्यतः कापालिकादन्यदिशं सम्मुखमिति यावत् ।

(१२) शार्दूलविक्रीडितेन प्रकारव्याघातमाह द्वौ । कठोरेत्यादि । हे पाप ! कर्दमेष्विव मांसपिण्डेषु निरातङ्को निर्भयः यथावत् विचरन् सन् । तथा कठोरास्थिग्रन्थिव्यतिकरेण कठिनास्थिग्रन्थिघट्टनेन यो रणत्कारो व्यक्तध्वनिः तेन मुखरः शब्दवान् । खरस्नायुच्छेदेषु कठिनस्नायुच्छेदेषु क्षणं मुहूर्तं विहितवेगव्युपशमः कृतवेगोपरमश्च असिः खड्गः गात्रं गात्रं प्रत्यङ्गं लवशः खण्डं खण्डं सपदि इदानीमेव विकिरतु विक्षिपतु ।

यावत् शकुनयो न पराहतन्ति, तावत् वत्सया मालत्या सह नगरदेवतागृहम् अविघ्नमङ्गलाय गन्तव्यम् इति आदिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः। तथा गृहीतसविशेषमण्डनः प्रतीक्षतामानुयात्रिको जनः।

कला। भवतु इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारजनसंकुलादमात्यप्रदेशादपक्रम्य, माधवोपकारं प्रति अभिनिविष्टा भवामि। [ इति निष्क्रान्ता। विष्कम्भकः। ]

[ ततः प्रविशति कलहंसकः। ]

आअत्तोम्हि, णअरदेवदाभवणब्भन्तरत्थिदेण समअरन्देण, अज्जमाहवेण, जधा आआहि दाव जत्ताहिमुहं पउत्ता मालदी ण वेत्ति, ता जाव णं आअच्छामि (क)।

ततः प्रविशतो माधवमकरन्दौ।

माध। मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारितै-
भूयः स्नेहविचेष्टितैर्गहनतां नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे,
कल्याणं विदधातु वा भगवती नीतिर्विपर्य्येतु वा ॥ (१)

---

(क) आज्ञप्तोऽस्मि, नगरदेवताभवनाभ्यन्तरस्थितेन समकरन्देन आर्यमाधवेन, यथा आगच्छ तावत् यात्राभिमुखं प्रवृत्ता मालती न वेति, तद्यावदेनम् आगच्छामि।

---

(१) मालत्या इति। अवहितो वयस्य मालत्याः प्रथमावलोकनदिनात् प्रभृत्येव आरभ्य विस्तारितैर्भूयः पुनरपि चिरकालस्थायिभिः स्नेह-विचेष्टितैः परामधिकां कोटिम् उत्कर्षं नीतस्य प्रापितस्य मे मम अद्य मदनायास-प्रबन्धस्य सर्वथा सर्वप्रकारेण अन्तः अन्तोऽवसानं सम्भूतमिवे। पूर्वं शब्दितकामबद्ध-स्तु वैफल्यं वा तन्निर्णयः। यथान्तरमात्र भगवती कामन्दकी कल्याणं क्षेमं विद-

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवाम्रलता परिमोषिणी।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुत्कण्ठां च व्यनक्ति मनोरुजम्॥ (६)

कथं निषादिता * गजवधूः?

माध। [सानन्दम्।] कथमवतीर्य्य भगवतीलवङ्गिकाभ्यां समम् इतः प्रवृत्तैव।

ततः प्रविशति कामन्दकी मालती लवङ्गिका च।

काम। [सहर्षमपवार्य्य।]

---

कलधौतं हेमरौप्ययोरिति विश्वः। पदेन वीथिना। वेत्रवता वेत्रदण्डिका। परिचिता रचिता। अन्तरा इति। अन्तरात् मध्यतः केनापि न बहिर्गन्तव्यमिति भावः। दूरत एव मालत्या इत्यर्थात्। पुरुसिन्दूरपूर एव सन्ध्यारागस्तेन लोहिता किञ्चिदारक्ता चटुला चपला घूर्णन्ती कम्पमाना वा नक्षत्रमाला सप्तविंशतिमौक्तिकमाला चलितपक्षावनर्मदो वा सेवाभरणं तद्धारिणीम्। रात्रिपक्षे नक्षत्रमाला तारकामाला। अरिचन्द्रिकानी सैव रात्रिस्ताम्। हृद्यमाना चासौ मनोहरा चेति समासः। पाण्डुरा धूसरा परिक्षामा अतिकृशा चकोरीभिर्ग्रस्ता: का। एतेन चन्द्रकलासाम्यमुक्तम्। हृद्यमाना इत्यनेन चक्षुषा दर्शनमात्रं तव परमुपभोग्यो मालत्या इति सूचितम्। पाण्डुरेत्यादिना मालत्यामाकार सदृश उक्तः। किञ्चिदन्तरं किञ्चिद्दूरम्। प्रहता गता। कलधौतदण्डपत्रेति पाठे दण्डपत्रं चक्रिकेत्यर्थः।

(६) इयमिति। पाण्डुभिः क्षामैः कृशैश्च अवयवैरङ्गैः अलङ्कृतमण्डना भूषिता-लङ्कारा अलङ्कारमपि अलङ्कुर्वतीत्यर्थः। अन्यत्र परिमोषिणी शोभयन्ती गता कलितकुसुमा धृतपुष्पा बालेव वरारोहा उत्तमाङ्गना मालती रम्यां मनोहरां विवाहमहोत्सवश्रियं वहति च धत्ते च उदयिनीमुत्थितामत एवोत्कण्ठां अभीष्टे मनोभवं कामोत्कण्ठां व्यनक्ति च ज्ञापयति च। यद्वा आम्रलता सपुष्पा नवा बाला कुतश्चित् वेष्टनात् यथा चन्द्र शोभां धारयति तथा मालती अपि इति भावः। कुसुमस्तबकं पुष्पलताश्च लतासाम्यमतः कान्त्याः शोभाविदर्शना।

* निषादिता उपवेशिता अवतारणार्थमिति भावः।

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।
कृतार्थीभूयासं प्रियसुहृदपत्योपयमने,
प्रयत्नः स्वल्पोऽयं फलतु, शिवदायी च भवतु॥ (७)

माल। [स्वगतम्।] केण उण उवाएण सम्पदं मरण-णिव्वावणस्स अन्तरं सम्भावइस्सं? मरणम्मि मन्दभाअहेआणं अहिमदंत्ति सुदुल्लहं होदि (क)।

लव। [स्वगतम्।] अतिक्कामिदा क्खु, पियसही एदिणा अणुऊलविप्पलम्भेण * (ख)।

[प्रविश्य पेटकहस्ता प्रतीहारी।] अमच्चो भअवदीं विण्णवेदि, एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदित्ति (ग)।

---

(क) केन पुनः उपायेन साम्प्रतं मरणनिर्वापणस्य अन्तरं सम्भावयिष्ये? मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति।

(ख) अतिक्रामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेन च।

(ग) अमात्यो भगवतीं विज्ञापयति, एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलङ्करणीया मालती इति।

---

(७) विधातेति। विधाता स्रष्टा मनोज्ञाय प्रतिकल्पकसुन्दराय विधये विधानाय प्रक्रान्तविवाहाय नोऽस्माकं भद्रं वितरतु ददातु स्वाशीरर्थे मङ्गलमयीमित्यर्थः। इतोऽपि विवाहे नृपतिविरोधात् अनिष्टमाशङ्क्य आशीर्वादमाह। देवाः परमरमणीयामतिशोभनां परिणतिं परिणामं विधेयासुः क्रियासुरित्यर्थः। प्रियसुहृदपत्यस्य माधवस्य उपयमने विवाहे अहं कृतार्थो कृतकार्या भूयासं भवितास्मीत्यर्थः। अभूततद्भावे च्विः। अयं मया क्रियमाणः स्वल्पः अल्पः प्रयत्नः फलतु शिवदायी च कल्याणकारकश्च भवतु।

* अनुकूलो माधवः तेन सह विप्रलम्भः विरहः तेन।

काम। युक्तमाह अमात्यः, माङ्गलिकमेतत् स्थानम् अतो दर्शय।

प्रती। इदं दाव धवलपट्टंसुअचोलअं, इदं च उत्तरीअं रत्तंसुअं इमे अ सव्वङ्गिआ आहरण-सञ्जोआ, अअं च मोत्तिआहारो, एदं चन्दणं, कुसुमापीडं अ (ज)।

काम। [अपवार्य।] रमणीयं हि वत्समकरन्दम् अवलोकयिष्यति मदयन्तिका। [प्रकाशं गृहीत्वा।] भवतु ओम् इति उच्यताममात्यः।

प्रतिहारी। तथा।

इति निष्क्रान्ता।

काम। वत्से लवङ्गिके! प्रविश त्वम् अभ्यन्तरं वत्सया मालत्या सह।

लव। अध भअवदी उण कहिम्? (झ)

काम। अहमपि तावद्विविक्ते अलङ्करणरत्नानां प्राशस्त्यं आप्ततः परीक्षिष्ये। [इति निष्क्रान्ता।]

माल। [स्वगतम्।] कधं, लवङ्गिआमेत्तपरिवारम्हि संवुत्ता। (ञ)

लव। इदं देवदामन्दिरदुआरं ता पविसम्ह। (ट)

[इति प्रविशतः।]*

मक। वयस्य! इतः स्तम्भापवारितशरीरौ तिष्ठावः।

---

(ज) इदं तावद्धवलपट्टांशुकचोलकं इदञ्चोत्तरीयं रक्तांशुकम्, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकाहारः, इदं चन्दनं कुसुमापीडञ्च।

(झ) अथ भगवती पुनः क्व?

(ञ) लवङ्गिकामात्रपरिवारास्मि संवृत्ता।

(ट) इदं देवतामन्दिरद्वारं तत् प्रविशावः।

[ तथा कुरुतः । ]

लव । सहि! अअं अङ्कुराओ, इमाओ कुसुममालाओ । (ट)

माल । तदो किं ? (ड)

लव । सहि ! इमस्सिं पाणिग्गहणमङ्गलारम्भे, कल्लाणसम्पत्तिणिमित्तं देवदाओ पूजेहित्ति, अम्बाए अणुप्पेसिदामि (ढ) ।

माल । किं दाणिं दारुणमारम्भदेव्वदुव्विलासपरिणामदुःखणिहट्टमाणसं पुणो पुणो वि मम्मच्छेददुःसहं मन्दभाइणीं दुणोसि (ण) ।

लव । अह किं अणुकामासि ? (त)

माल । जं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्तभाअधेओ * जणो मन्तेदि (थ) ।

मक । सखे ! श्रुतम् ।

माध । श्रुतमसन्तोषस्य हृदयस्य ।

माल । [लवङ्गिकां परिष्वज्य ।] ता, परमत्थवहिणि पिअ-

(ट) सखि ! अयमङ्कुराः इमाः कुसुममालाः ।

(ड) ततः किम् ?

(ढ) सखि ! अस्मिन् प्राणिग्रहणमङ्गलारम्भे, कल्याणसम्पत्तिनिमित्तं देवताः पूजयेति, अम्बया अनुप्रेषितास्मि ।

(ण) किमिदानीं दारुणमारब्धदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनर्मर्मच्छेददुःसहां मन्दभागिनीं दुनोषि ।

(त) अथ किमसि अनुकामा ?

(थ) यदिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते ।

* दुर्लभे माधवे अभिनिवेशिनः मनोरथस्य विसंवदत् प्रतिकूलं भागधेयं भाग्यं यस्य सः । बहुव्रीहिः ।

माल। सहि! पिअं क्खु तुम्हाणं मालदीजीविदं, ण उण मालदी। (प)

लव। किं एव्वं भणिदं भोदि। (फ)

माल। [आत्मानं निर्दिश्य।] जेण अण्णजणपच्चासाणिबन्धणेहिं असंविहाणेहिं जीआविअ इमं ज्जेव्व महाबीभच्छारम्भं अणुभाविदह्मि, सम्पदं उण मम मणोरहो एसो ज्जेव्व जं तस्स देवस्स परोक्खगुणकित्तणेण अणवरद्धं अत्ताणं परिच्चइस्संत्ति, ता, इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु (ब)।

इति पादयोः पतति।

मक। सैषा सीमा स्नेहस्य।

लवङ्गिका। माधवं संज्ञया समाह्वयति।

मक। वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ।

माध। वयस्य! परवानस्मि साध्वसेन।

मक। इयमेव नेदीयसी प्रकृतिरभ्युदयानाम्।

माधवः। लवङ्गिकास्थाने तिष्ठति।

माल। सहि! करेहि अणुऊलदाए पसादं (भ)।

---

(प) सखि! प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती।

(फ) किमेवं भणितं भवति।

(ब) येन अन्यजनप्रत्याशानिबन्धनैरेवमसंविधानैर्जीवयित्वा इममेव महाबीभत्सारम्भमनुभाविताऽस्मि। साम्प्रतं पुनर्मम मनोरथ एष एव यत्, तस्य देवस्य परोक्षगुणकीर्त्तनेन अनपराद्धमात्मानं परित्यक्ष्यामीति। तदस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु।

(भ) सखि! कुरु अनुकूलतया प्रसादम्।

चिरासाह्मि संवुत्तेति, तुएवि पिअसहीए सव्वदा सुमरिदव्वह्मि। एसा अ सिरिमाहवसहत्थणिम्माणमणोहरा बउलमाला मालदीजीविदणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीअत्ति (य)। *

स्वकण्ठादपनीय माधवस्य हृदि विन्यस्यन्ती सहसा चपलम् साध्वसोत्कम्पं नाटयति।

माध। [अपवार्य।] हन्त!

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे।
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः ॥ (१२)

---

चिरदुःसहाकारदुर्मनायितसखीजना: शरीरसन्तापा:, कथमपि अतिवाहिता: चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्परा:, साम्प्रतं पुनर्निराशास्मि संवृत्ता इति, त्वयापि प्रियसख्या सर्वदा स्मर्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा बकुलमाला मालतीजीवितनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वथा हृदये धारणीया इति।

---

अतिवाहिता अतिक्रान्ता। चन्द्रातप इति तापकारित्वादातप:। एतैवा-नर्थत्वमाह भरत:। सर्वाणि ये सुखं कुर्युस्ते दुःखं विरहे ध्रुवम्। इति। अलंबनेन करुणव्यभिचारित्वं आरभमाह। यदाह। व्यभिचारिणोऽस्य, निर्वेदो ग्लानिमरणव्याधिदैन्यमादय:। व्यभिचारिणोऽस्य, निर्वेदो ग्लानि-मरणव्याधिदैन्यमादय:। नैराश्याच्च मरणोदय:। यदाह। सर्वैरेव प्रकारैर्हि नास्ति समागम:। आशाविना यदीयाशा जायते मरणं तत:। विप्र-लम्भकथान्तरं व्याजेन प्रकारान्तरोपक्रममाह। एषा चेति। साध्वसं भयम्।

(१२) एकीति। निर्भुग्नपीनकुचकुड्मलया कुञ्चितपीनकुचमुकुलया अनया मालत्या इत्यर्थ:। कर्पूरहारहरिचन्दनचन्द्रकान्तानां निष्यन्द: द्रव: तथा शैवल-

मक। महाभागे! एवमेतत्।

त्वं वत्सेति कथमप्यवलम्बितात्मा,
सत्यं जनोऽयमियतो दिवसाननैषीत्।
आबद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य, नन्दतु चिराय, फलन्तु कामाः॥ (१४)

लव। महाणुभाव! हिअए वि अपडिहदसअंगाहसाहसो अअं जणो, किं दाणिं कङ्कणाभरणं करं विआरेदि महाभाओ (ञ)?

माल। [स्वगतम्।] हा हद्धी! हद्धी हदम्हि, कम्म-आप्पणविरुद्धं किम्पि एसा उवण्णसदि (ध)।

प्रविश्य कामन्दकी। पुत्रि! कातरे! किमेतत्?।

मालती। कम्पमाना कामन्दकीमालिङ्गति।

काम। [illegible]।

पुरश्चरागस्तदनु मनसोऽनन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव।

---

(ञ) महानुभाव! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं कङ्कणाभरणं करं विचारयति महाभागः। अप्रतिहतः परिग्रहीतः स्वयं ग्राहसाहसः येन सः एवं जनः मालती। तं मालत्याः करं सहसा गृहाण इति तात्पर्यम्।

(ध) हा! हा धिक्! हा धिक्! हतास्मि, कष्टमात्मजनविरुद्धं किमपि एषा उपन्यस्यति।

---

(१४) त्वमित्यादि। त्वं वत्सा पुत्री वा इति कृतोपदेशं जनो मालती विधृतजीवितः सन् एतावतो दिवसान् अनैषीत् नीतवान्। अत्र आबद्धकङ्कणः विवाहसूत्रो हस्तविभूषणं वा यः करस्तस्य प्रणयो विवाहकाले ग्रहणं तद्रूपं प्रसादं आसाद्य प्राप्य नन्दतु। चिराय बहुकालम् कामाः अभीष्टाः मनोरथाः फलन्तु। कङ्कणं सूत्रं सूत्र इति मिश्रः।

(१५) पुर इति। पुरः आदौ अनुरागो नैसर्गिकः तदनु तदनन्तरं मनसः

युवा सोऽयं, प्रेयानिह सुवदने ! मुञ्च जडताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः ॥ (१५)

लव। भअवदि ! कसणचउद्दसीरअणीमसाणसञ्चरण-णिव्वत्तिदविसमव्ववसाअणिट्ठापिअचण्डपासण्डपअण्डदोद्दण्ड-साहसो साहसिओ क्खु एसो, अदो मे पिअसही उक्कम्पिदा (ख)।

मक। [ स्वगतम् । ] साधु लवङ्गिके ! साधु, अवसरे खलु अनुरागोपकारयोर्गरीयसी: उपन्यास: ।

माल। हा ताद ! हा अम्ब ! (ग)

काम। वत्स माधव ! ।

माध। आज्ञापय ।

काम। इयम् अशेषसामन्तमस्तकोत्तंसपरागरञ्जितचर-णाङ्गुले: अमात्यभूरिवसो: एकम् अपत्यरत्नं मालती, भगवता सहृदयसंयोगरसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते। [ इति ददाति । ]

मक। फलितं हि मनोरथैः भगवतीपादप्रसादेन ।

(ख) भगवति ! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिर्वर्त्तितविषमव्यवसाय निष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, यतो मे प्रियसखी उत्कम्पिता । विषमव्यवसायः महामांसविक्रयः । निष्ठापितः निहतः । पाषण्डः अघोरघण्टः । साहसिकोऽपि भयं भवति यतः मे सखी मालती उत्-कम्पिता ।

(ग) हा तात ! हा अम्ब !

चित्तस्य अनन्यपरता एकायत्तत्वम् । यस्य त्वयि, तव च यत्र तनुत्वाविर्देशविवादः अभवत् अधुना प्रेयान् प्रियतमः सोऽयं युवा माधवः इह अत्र विद्यते इति शेषः । हे सुवदने ! सुमुखि ! जडतां दैन्यजाड्यं मुञ्च त्यज, विधातुर्वैदग्ध्यं चातुर्यं विलसतु मदनः कामः सकामः सफलमनोरथोऽस्तु ।

माध । तत्किमिति वाष्पायितं भगवत्या ? ।

काम ।

[ चीवरांचलेन नेत्रे परिमृज्य । ]

विज्ञापयामि कल्याणिनम् ।

माध । ननु आज्ञापय ।

काम । परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात ! मत्तः परस्तात्-
परिचयकरुणायां सर्वथा मा विरंसीः ॥ (१६)

इति पादयोः पतितुमिच्छति ।

माध । [निवारयन् । ] अहो ! वात्सल्यादतिक्रामति प्रसङ्गः ।

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ? ॥ (१७)

---

(१६) परीति । तात ! वत्स ! पुत्रे पितरि पूज्ये च ताततब्दः प्रयुज्यते इति शब्दार्णवः । त्वद्विधानां युष्मद्विधादिसम्बन्धानामित्यर्थः । प्रीतयः परिणतिरमणीयाः परिणामसुखदायिका इत्यर्थः । तैस्तैः रमणीयप्रीतिप्रतिपादकैः इति यावत् हेतुभिर्निमित्तैः अहमपि तव मान्या माननीया संवृत्तास्मीति भावः । तत् तस्मात् मत्तः परस्तात् मयि मृतायां सत्यामित्यर्थः । परिचयकरुणायां परिचयमात्रेणैव दयापात्रामिह सुवदनायां मालत्यां सर्वथा मा अरंसीर्विरतो मा भव । सदैवानया सह विस्रम्भकथालापेन सुखेन कालं नयेत्यर्थः ।

(१७) श्लाघ्येति । श्लाघ्यान्वया उच्चकुलोद्भवेति नयनोत्सवकारिणी नेत्रानन्दजननीति, निर्व्यूढसौहृदभरा उपचितप्रेमनिकरेति गुणोज्ज्वला शीलादिमती इति इयं मालती भवति इत्यर्थः । एतादृशगुणानां मध्ये एकैकमेव हि

काम । वत्स माधव !

माध । आज्ञापय ।

काम । वत्से मालति !

लव । आणवेदु भअवदी । (ख)

काम । प्रेयो मित्रं, बन्धुता वा समग्रा,
सर्वे कामाः शेवधिर्जीवितञ्च ।
स्त्रीणां भर्त्ता, धर्मदाराश्च पुंसाम्
इत्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ (१८)

मक । अथ किं ।

लव । भअवदि ! जधा तुम्हे आणवेध । (क)

काम । वत्स मकरन्द ! त्वमनेनैव वैवाहिकेन मालती-नेपथ्येन प्रसाधितः, परिणायय आत्मानम् ।

[ इति पेटकमर्पयति । ]

---

(ख) आज्ञापयतु भगवती ।

(क) भगवति ! यथा त्वम् आज्ञापयसि ।

---

एवैकस्य एव गरीयो गुरुतरं वशीकरणं मन्त्रौषधादिना वश्यतानयनोपायः पृच्छाम् इयमेव मालती प्रियतमा इति प्रेयः इति हेतोश्च किं ब्रवीमि अतः परं न मे बहु वक्तव्यमस्ति ।

(१८) प्रेय इत्यादि । वत्सयोर्मालतीमाधवयोरन्योन्यमेतदित्थमस्तु यत् स्त्रीणां भर्त्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृत् समग्रा बन्धुता बन्धुसमूहः सर्वे कामाः ईप्सिताः शेवधिर्निधिर्जीवितं च । पुरुषाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि । बन्धुवैकल्य बान्धवबन्धुसहायेभ्यस्तलिति समूहे तल् । निधिर्ना शेवधिरित्यमरः । अनेन वाक्यार्थविराहो दर्शितः । स आतुरावस्थाख्यो ऽङ्कः । यदाह । चतुरावाक्यकलेन वाक्यर्थः प्रेरितो यतः । इति ।

मक। यदाज्ञापयति भगवती, यावदितश्चित्रजवनिका-मन्तर्धाय नेपथ्यं धारयामि। [ तथा करोति। ]

माध। भगवति! सुलभव्यसनार्थम् अतिसङ्कटम् इदं वयस्यस्य।

काम। वत्स: कस्त्वमस्यां चिन्तायाम्?।

माध। एवं भगवती एव जानाति।

[प्रविश्य मकरन्द:। विहसन्।] वयस्य! मालती अस्मि।

[ सर्वे सकौतुकं पश्यन्ति। ]

माध। [मकरन्दं परिष्वज्य, सोपहासम्। ] भगवति! कृतपुण्य एव नन्दनो, य: प्रियामीदृशीं मनसा मुहूर्तमपि कामयिष्यते।

काम। वत्सौ मालतीमाधवौ! इतो निर्गत्य, हृष्टगच्छ-नेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकाया: पश्चा-दुद्यानवाट: सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अव-लोकितया। भूयश्च

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै:
ताम्बूलीपटलै: पिनद्धफलिनव्यानम्रपूगद्रुमा:।

(१८) गाढ़ेत्यादि। तदुर्वी भागा उद्यानवाटिकाया: प्रदेशा वो युवयो: रत: मङ्गलादिकं विधास्यन्ति शृङ्गाररसोपवनविहरणजन्यत्वात्। तदाह। उप-वनगमनविहारै: शृङ्गाररस: समुद्भवति। पुन: प्रदेशा: कीदृशा:। ताम्बूली पर्णलता तासां पटलै: समूहै: पिनद्धा वेष्टिता: फलिन: फलयुक्ता अतएव व्यानम्रा: व्यानता: पूगद्रुमा: गुवाकवृक्षा येषु ते। कीदृशै: ताम्बूली पटलै:। गाढा उत्कण्ठा यस्या: सा च कठोरा तरुणीवयोविशेषा: केरलदेशवधूस्तस्या: गण्डवत् कपोलवदवपाण्डुरो ईषत्पाण्डुरश्छद: पत्रं येषां तै:। रतिवल्लीति इत्था प्रतिपत्तामूलिका गुवाका च। वनितामवतर्कितवन्दिता सा विशेषा कुमौदा तु॥

मद। [तथा कृत्वा।] सहि! दुम्मणाअदि इअं वामसीला (झ)।

लव। कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं विअड्ढमहुरभासिणं सविणेहं सरीअअं च दे भादरं भत्तारं समासादिअ सही ण दुम्मणाइस्सदि (ञ)। (९)

मद। बुद्धरक्खिदे! पेक्ख विप्पदीवं अम्हे वि उवालम्भीआमो (ट)।

बुद्ध। विप्पदीवं ण विप्पदीवं वा। (ठ) (१०)

मद। कधं विअ। (ड)

बुद्ध। जं दाव चलणपडिदो वि भत्ता ण बहुमाणिदो

---

(झ) सखि! दुर्मनायत इयं वामशीला।

(ञ) कथं नाम नववधूविस्रम्भणोपायज्ञातारं मनोहरं विदग्धमधुरभाषिणं सस्नेहं शरीरकं च ते भ्रातरं भर्तारं समासाद्य सखी न दुर्मनायिष्यते।

(ट) बुद्धरक्षिते! प्रेक्षस्व विप्रतीपं वयमपि उपालभ्यामहे।

(ठ) विप्रतीपं न विप्रतीपं वा।

(ड) कथमिव।

---

(९) अत्र विस्रम्भं विश्वासमुत्पाद्य वशीकरणम्। लडहं मनोहरम्। विदग्धं कलाभिज्ञम् नववधूविस्रम्भणोपायस्त्वाम्बूलादिदानम्। यदाह। बाला ताम्बूलमाल्यफलरससुरसाहारसंमानदाक्षिण्यादिकः सुप्रसिद्ध एव। प्रकृते तूपालम्भपदस्य विपरीतार्थकत्वमिति भावः।

(१०) विप्रतीपं विपरीतम्। पादपतितमन्दानमनुवर्तनाभावाक्षेपोपालम्भानादरकरणाद्विपरीतत्वमिति भावः। पादपतनेऽनुकूलो भर्ता। क्रीडायुक्तापि वा कोपविहितापि वा भवेत्। पादे पतनं युवजनमनुवर्तेत सर्वदा। बुद्धरक्षिताया वाक्यं। विप्रतीपं न वा विप्रतीपम्। तच्चित्तानुवर्तनेन क्रीडनयुक्ताभिराकरणेन वैपरीत्यमिति भावः।

बुद्ध। कोहणं लवङ्गिआ भणादि (ख)। २७

मद। बिभेम्हि सम्पदं पिअसहीओ! (ग)।

लव। जइ एव्वं ता कधेहि कधं णु दे कालो गच्छदि त्ति (घ)। (२८)

मद। णिसामेहि पिअसहि! मम बुद्धरक्खिदापक्खवादपच्चएण पढमं ज्जेव तस्सिं जणे अदिभूमिं गदो अणुराओ। अवि अ। तस्सिं जणे भविदुव्वारम्भकोदूहलुक्कण्ठा-मणोरहं हिअअं आसी। तदो विह्निणिओअणिव्वुत्तदंसणा अविअ दुव्वारदारुणाणङ्गदुक्खमन्दाविदकण्ठकिच्चत्तिअडलम्ब-जीविदा सम्भाविदम्हि। विजिम्भिदापुव्वसब्बङ्गप्पज्जलिअ-

(ख) कोपनं लवङ्गिका भणति।

(ग) बिभेमि साम्प्रतं प्रियसख्यौ!।

(घ) यद्येवं तत् कथय कथं नु ते कालो गच्छतीति।

(ङ) निशामय प्रियसखि! मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिन् जनेऽतिभूमिं गतोऽनुरागः। अपि च तस्मिन् जने भवितव्यारम्भकौतूहलोत्क-

त्वरितमायकथयेति भावः। अभिभूमीति पाठेऽभिप्रायतात्पर्यम्। अत्र जानीम एवेति कामन्दक्याऽभिहितं तव मकरन्दस्य च चेष्टितं ज्ञातमेव। तत् कथमपह्नव इति भावः। अपवर्गात् कथात्। मकरन्दमिति मकरन्दे चेष्टानुबन्धमपि कथ-येत्याशयः। कथयन्ति क्रियाविशेषणम्।

(२७) अत्र कोपनं कथयितुमशक्तत्वम्।

(२८) अत्र मकरन्दवियोगेन कथं वर्तसे इति भावः।

(२९) अत्र निशामय शृणु। एकवचनमिदं लवङ्गिकापेक्षया। बुद्धरक्षि-तायाः विहितपक्षपातत्वात्। कथाकथनं तु रागद्वये यथार्थ। आशा पुर-न्दरसुन्दरी वा कापीयं चित्रं रतिसहचरा च। मकरन्दपाला: मकरन्दपर्यायाः

